ஸம்ஸ்க்ருதஶ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका

SAMSKṚTAŚRĪ

ஸம்ஸ்க்ருதஶ்ரீ



A Fortnightly Bulletin of the Samskrit Education Society, Madras.

Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00




9, Single Mall Street, Tiruchirapalli-620 002.

माला — 4 पुष्पम् — 7

वागीश्वर्यै नमः

उद्यत्कोटिदिवाकरप्रतिभवत्तुंगोरुकुंभस्तनी-
बद्धार्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता ।
बिभ्राणारुणपंकजे जपवटीं पाशांकुशौ पुस्तकं
दिश्याद्वो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम् ॥

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5082-रौद्र-मकर-9 (4-7) 22—1—81

अन्तर्गतं च तिमिरं हरन्ति विहसन्ति रोहिणीकान्तम् ।
हसितानि गिरिशसुदृशो मम प्रबोधाय कल्पन्ताम् ।

—उमासहस्रतः

## चरैव चरैव (३)

" चरैवेति मां स पुरुषोऽवादीत् । अतो न पितरं द्रष्टुं गच्छेयं " इति धिया प्रतिन्यवर्तत रोहितः । चतुर्थं वत्सरं वने चरन्नयापयत् । अन्तर्गाढा पितृदर्शनोत्कण्ठा पुनस्तमचोदयद्वत्सरान्ते नगरगमनाय । निवर्तमानमिन्द्रः पुरुषरूपेण परीयाय । उपदिदेश च—

कलिः शयानो भवति सञ्जिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन् ॥

युगाश्चत्वारः । सर्वलोकधारको धर्मः, स्वधारणेऽन्यानपेक्षः, यस्य शक्त्या वातः पवते, सूर्य उदेति, अग्निरिन्द्रो मृत्युरन्येऽन्ये देवाः स्वं स्वं पदमधितिष्ठन्ति । तदनुग्रहप्राप्त्यै चत्वारः पादाः, तस्यापि धारका इव, तपः शौचं दया सत्यमिति, यच्छीलनेन धर्मो धरत्यस्मान् । कृते युगे सर्वे जनाः सर्वत्र सर्वदा धर्म-चतुष्पादशीलनैकरता आसन् । धर्मस्तान् पूर्णतया दध्रे, यतो जनाः पूर्णाः संपन्नाः चरन्तः (सर्वशक्तिमन्तः) आसन् । तेषां धर्मपादानां प्रतियोगिभाववर्धकाः स्मयः संगो मदोऽनृतमिति चत्वारः । धर्मपादेषु श्रद्धाक्षरया, तद्विरुद्धेषु स्मयादिषु रतिवृद्ध्या धर्मपादेषु दुर्बलेषु, धर्मेण जनानां धारणं क्रमेण अपाक्षीयत । कृते चरणशीलो जनः, त्रेतायां केवलमुपवेशनादुत्थाने प्राभवत् । द्वापरे

शयनादुत्थाय पीठे उपवेशने एव शक्तोऽभूत्। कलौ तु तत्राप्यशक्तः शयान एव भवति। धर्मपादेषु श्रद्धाजाड्यं, अधर्मपादेषु धारणप्रतिकूलेषु श्रद्धाधिक्यं च तत्र हेतुः। परं उद्यमेन कलावपि कृतयुगीनं धर्मानुग्रहं प्राप्तुं वयं प्रभवाम इति ब्रूते इन्द्रः। "उद्धरेदात्मनैवात्मानम्। शयानः कुत्राप्ययुक्तोऽनुद्युक्तः पुरुषः कमपि सुखं न विन्दति। अतो न गृहं गच्छ, यत्र शयनमेव ते रोचेत। अतः शयनरूपात् अनुद्योगादुत्तिष्ठ, उपविश, किमपि कर्तुमुद्दिश, तत्र उत्तिष्ठ, तिष्ठ, कर्तव्येऽर्थे दृढं संकल्पय, ततश्चर, कर्तव्यसिद्धयै यतमानः आसिद्धि कर्म कुरु, मा विरम। चर चरैव चरैव। शयानः कलिः, शयनमुज्जिहानो द्वापरः, उत्तिष्ठन् त्रेता, संपन्नश्चरन् कृतः इति धर्मरक्षणे पूर्णापूर्णतेऽस्मदुद्योगमनुसृत्य"।

(अनुवर्ति)

# नमः कविभ्यः पूर्वेभ्यः

[वामनभट्टबाणो महाकविः आन्ध्रदेश्यः विजयनगरसाम्राज्ये कोण्डवीडुराज्ये च महितः। रघुनाथचरितं नलाभ्युदयं च काव्यद्वयं, वेमभूपालचरितं नामाख्यायिकां, पार्वतीपरिणयं कनकलेखाकल्याणं बाणासुरविजयं नाम नाटकत्रयं शृंगारभूषणबाणं चासौ रचितवान्। "पद्ये पटीयान् किल कालिदासो गद्ये पटीयान् किल बाणभट्टः। पद्ये च गद्ये च परं पटीयान् वत्सान्वयो वामनभट्टबाणः।" इत्यात्मानं श्लाघते क्वचित्। 'विद्यारण्यगुरून् सार्वभौमाद्यखिलसत्कवीन्। नमस्कृत्याथ बाणेन क्रियते शब्दचन्द्रिका" इति स्वगुरून् स्मरति शब्दचन्द्रिकायाम्। शब्दचन्द्रिका शब्दरत्नाकरश्च द्वौ व्याकरणकोशग्रन्थौ तदुपज्ञौ। आत्मप्रत्ययधृष्टोऽप्ययं रघुनाथचरिते प्रथमतः पूर्वेभ्यः कविभ्यो नमोवाकं प्रशास्ते। यं साङ्ग्लानुवादं अधो वितरामः। अनुवादकः प्राचार्यः वी. गोपाल अय्यंगार एम्. ए.]

जयन्ति सन्तः कवयो दिग्विजृम्भितकीर्तयः।
कर्णावतंसतामेति सतां यत्सूक्तिमञ्जरी।

Hail to the learned poets, whose fame
over all the quarters spreads.
With the clusters of their flower-like words,
the wise adorn their ears.

वाणी महाकवीन्द्राणां कापि माणिक्यदीपिका ।
धुनाना जगदज्ञानध्वान्तमिन्धे स्वतेजसा ॥ २ ॥

The utterance of great immortal poets
is a marvellous ruby-torch.
Dispelling the darkness of the world's ignorance,
it blazes forth with its own lustre.

आननेन्दुसमुद्भूता कवेरमृतशीतला ।
कस्य वा न सुखं कुर्यात्कविता चापि कौमुदी ॥ ३ ॥

Flowing forth from the moon of the poet's face,
refreshing with ambrosial sweetness,
Poesy and moonlight both alike
enrapture the heart of one and all.

वन्द्यः कस्य न वाल्मीकिर्यस्य वाङ्मधुनः कणान् ।
आदाय कवयोऽद्यापि निक्षिपन्ति स्वसूक्तिषु ॥ ४ ॥

Who will not adore Valmiki,
whose words are like a spray of honey ?
Picking up a few particles there,
the poets besprinkle, even now, their works.

सुधाया वाक्सुधायाश्च वाल्मीकेर्वदनार्णवात् ।
वक्त्रैः सुमनसः पूर्वां पिबन्ति श्रवणैः पराम् ॥

Nectar rises from the ocean ; the nectar of words.
from the ocean of Valmiki's face.
Gods drink the former with their mouth
and wisemen, the latter, with their ears. (भट्टवर्ति)

# कस्यांचन रात्र्याम् (२)

शिरोमणिः ना. वेङ्कटरमणः, बी. काम्., तञ्जापुरी

" जात! यस्मिन् विषये तव स्वानुभवः विद्यते, यं च विषयं सप्रकरणं, सप्रमाणं, सप्रत्ययं च समर्थयितुं, वादितुं वा शक्नोषि, तमेव विषयं निश्चिनु लेखनावसरे। अन्यथा विपरीतकीर्तिरेव भवेत्।

प्रबन्धस्य सुयोग्यमावर्जकं च शीर्षं प्रदेयम्। प्रथमतः निबन्धपरिचयं समासेनोल्लिख्य वाचकानां मनसि रुचिराभिरुचिरुत्पादनीया। क्रमेण स्वोद्दिष्टविषयान् चमत्कारेण स्वारस्येन च विधिना सरलसरलया मधुरमधुरया च गिरा क्रमेण विस्तृत्य पठतामुद्दीपनं कर्तव्यम्।

लेखने यां कामपि रीतिं शैलीं वा आश्रय। एकत्र सरलाऽन्यत्र प्रौढा इति मा भवेत्। नियमेनान्यस्य शैलीं मा स्वीकुरु, येन वाचकाः वस्तुतस्त्वदुल्लिखितान् स्वदीयतया न मन्येरन्। किन्तु, मयाऽत्रोपायः कश्चन कथ्यते सद्रचनां कर्तुम्। पद्यरूपां रचनां चिकीर्षसि चेत् श्रीमद्वाल्मीकेः रामायणं किञ्चित् पठित्वाऽऽरभस्व। यदि गद्यात्मके काव्ये इच्छा चेत् कादम्बरीतः यं कमपि भागमादाय पठ। उताहो शास्त्रग्रन्थकरणे मतिर्यदि श्रीशङ्करभाष्यं वाचय। अनेन तेषां महनीयानां वाग्धारा तवापि रचनायां स्वयमेव प्रवेशं गच्छेत्।

आयुष्मन्! बहुधा श्रोतव्यं, बहुभ्यः श्रोतव्यमिति प्राचामुक्तिमनुसृत्य यदि सद्विषयश्रवणाभ्यासः क्रियते, तत् महदुपकारकं विलसेत्, तव काव्यकृतौ सर्वदा तव वाक् सुखबोध्या संभाषणस्वरा, सारार्था, प्रसन्ना, हृदिस्पृक्, रसध्वनिगर्भिता सालङ्कारा च यदि विलसेत् तर्हि आपामरं आपण्डितं च जगत् प्रियमनुभवति। अश्लीलानि, विरुद्धार्थद्योतकानि, असंस्कृतानि, नीरसानि च वाक्यानि सर्वथैव परिहरणीयानि।

अपरं च पारिभाषिकानि वा सांकेतिकानि वा वचनानि मा प्रयुङ्क्ष्व लेखने। व्यवहारे लोकस्य, कतिपये शब्दाः निरर्थकाः ग्राम्याः असंस्कृताश्च ये वर्तन्ते, तान् सर्वथा त्वद्रचनायां मा प्रवेशय।

रचना यदि संभाषणरीत्याऽऽरभ्यते आसमाप्तेः तयैव धारया भाव्यम्। तथैव, प्रौढया शैल्याऽऽरंभो यदि, संपूर्णतया तयैव शैल्या, गत्या च निर्वहणीया। किञ्च, लेखनसमये क्वचित् समीचीन-पदानि न स्मृतिपथमागच्छेयुर्यदि, तर्हि तत्स्थानं रिक्तं (शून्यं) कृत्वा स्वगृहीतविषयं निरर्गलं लिख। नो चेत् चिन्तनधारा स्थगिता भवेत्। विषयलेखनान्तरं सुयोग्यं पदं पर्यालोच्य पूरय तच्छून्यस्थानम्।

बहिश्चलनकाले स्नानावसरे, अन्योपन्यासश्रवणकाले भोजनवेलायां, रात्र्यां स्वप्नावसरे च ये ये नूतनाः विषयाः मनसि स्फुरन्ति सर्वान्ताननुपदमेव निजपुस्तिकायां विलिख। नो चेत् त्वमपूर्वाः ताः कल्पनाः विस्मरेः। तव तादृशः आत्मविश्वासः भवितव्यः यत् "मत्सदृशा एव पठितारोऽपि रसोत्सुकाः, स्वधिगतपरमार्थाः अनुभूततत्तद्रसास्वादाश्च भवेयुरिति। तव मानसप्रतिबिंब एव वाचकानामपि हृदयम्।

अपरञ्च, माऽऽत्मगतचर्चां परनिन्दनां च विलिख्य रसभङ्गं कुरु। आत्मानं विस्मृत्य वाचकानेव मनसि कृत्वा स्वाभाविकतया या वाक् निस्सरति तामेवाश्रय। लेखनसमापनानन्तरं आत्मानमेव शोधकं दोषज्ञं च मत्वा स्वग्रन्थलिखितविषयान् पुनः पुनः पठ। व्याकरणाशुद्धिं, तथान्यदोषान् संशोध्य यं कञ्चित् सहृदयमाप्तं श्रावय। शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं मदनलेखं कृत्वा शकुन्तला वदति—" हला! शृणुतमि-दानीं सङ्गतार्थं वा न वेति "। "अवहिते स्वः" इति सख्यौ प्रत्यवदताम्। रहस्याख्यातोपि मदनलेखोऽपि व्यवस्यन्तराङ्गीकृतिप्राप्तेरनन्तरमेव प्रेषणीय इति महाकवेः कालिदासस्य मतम्। आपरितोषाद्विदि खलु तस्य विनय-

निवेदनम्। तत् मुद्रणात्पूर्वमवश्यं स्वलिखितविषयः पण्डितेनान्येन परीक्षितव्यः अङ्गीकर्तव्यश्च।

आयुष्मन्! मद्वचनप्रकारेण रचयस्वानुपमान् गद्यप्रबन्धान्। मा कुरु चिन्ताम्। "सहस्रं वद, एकं मा लिख," 'गद्यं कवीनां निकषं वदन्ति"—इत्यादीनि लोकवचनानि निहत्य प्रयत्नं कुरु गद्याख्यायिकाकथानिबन्धव्यासरचनायाम्। न त्वयैकेनैव केवलं शक्यते। त्वमन्यानपि पण्डितान् सम्मुखेन संप्रार्थ्य यथा गद्यात्मकः मम दक्षिणहस्तः वृद्धिं गच्छेत् तथा कुरु महान्तमुपकारम्। लोकाः समस्ताः सुखिनो भवन्तु।"

सपदि विरता श्रुतिसुखा वाणी। उन्मीलिते च मे लोचने। निरतिशयानन्दमेदुरोऽहं शयनादुत्थाय भगवतः परमेश्वरस्य सन्निधौ सर्वामपि स्वप्नवार्तां निवेदितवान्। निशावसानदृष्टस्वप्नानि न विफलानि भवन्तीति लोकोक्तिः। नाहं प्रभवामि सुरभारतीं तर्पयितुम्। तस्मान्निवेद्यते अत्रभवतां पण्डितप्रकाण्डानां पुरतः गैर्वाण्याः कामना। पूरयत वा मुञ्चत वा तामिच्छाम्। विषयेऽस्मिन् ततः परं सहृदयाः विद्वांसः एव प्रमाणम्।

---

अर्थो न केवलमिह प्रकृतोपयोगी दृश्येत वश्यवचसां
हि गिरा कवीनाम्।
अर्थान्तराणि च, यथा निधयोऽतिगुप्ताः सिद्धाञ्जनेन
बहवः प्रकटीभवन्ति॥

[वश्यवचसां कवीनां गिरा (वाक्येन) न केवलं प्रकृतोपयोगी प्राकरणिकः अर्थः किंतु अर्थान्तराणि च प्रकटीभवन्ति। भूमिगर्भे अतिगुप्ताः निधयः बहवः प्रकटीभवन्ति खलु।]

“ अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।

सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ ”

[ஒன்றிலும் ஆசையற்றும், சுத்தமாகவும், சோம்பலின்றியும், விருப்பும் வெறுப்புமற்றும், மனநோயில்லாதும், எல்லா முயற்சிகளையும் விட்டவனாகவும் இருக்கின்ற எனது பக்தன் எவனோ அவன் எனக்குப் பிரியமானவன்.] பகவத்கீதை XII-16



கணவரை விடச் சிறந்ததொன்று பதிவிரதைக்கில்லை என்று எல்லா விஷயங்களிலும் அந்தப் பதிவிரதை நிழலைப்போல் அவரைப் பின் தொடர்ந்தாள். உத்தான பாதர் இவளது இன்பத்தைப் பற்றிச் சிறிதும் பொருட்படுத்தவில்லை. பெரும்பாலும், நன்னடத்தையுள்ள வர்களிடத்தில் விதி கோணலாகத்தான் இருக்கும். 75

तुल्येषु रूपकुलशीलवयस्सु कामं
तां यत्सतीमपि सदा दयितोऽवजज्ञौ ।
नैव प्रतीपममुनाऽप्यगमत्सुनीतिः
स्पन्देत नापि विपदा सुजनः स्वनीतेः ॥

உருவ அழகு, நற்குடித்தோன்றல், நற்பழக்கம், வயது இவை பெருமளவில் சமமாக இருந்தும், பதிவிரதையாயிருந்தும் அவளை கணவர் அவமதித்தாராயினும், அதனாலும் அவருக்கு எதிராக ஸுநீதி நடக்கவில்லை. நல்லோர் தன் நேர்மையை விட்டு ஆபத்து நேர்ந் தாலும் நழுவுவதில்லை. 76

श्लाघ्यां सतीजनकुलैकशिखामणिं तां
एतादृशीमपि मनागभिनन्द्य जातु ।
अत्यन्तरूढसुरुचीमुखमोहदग्धः
तस्यामजस्रमपि भूपतिरास्त सक्तः ॥

ஸுருசியின் முகத்தில் மிகவும் வளர்ந்து விட்ட மோகத்தால் எரிக்கப்பட்ட அரசர், புகழத்தக்கவளும் பதிவிரதைக் கூட்டத்திற்கே தலையணியாகவுமுள்ள இத்தகையவளைக் கூட எப்போதோ சிறிது மகிழ்வித்துவிட்டு அந்த ஸுருசியிடத்திலேயே எப்போதும் தன்னை இணைத்துக் கொண்டிருந்தார். 77

सुब्रह्मण्यः सुचरितपरः श्रोत्रियो यं सुधीशं
सीतालक्ष्मीरपि च सुषुवे श्रीमती तादृशस्य ।
काव्ये श्लाघ्ये कविगणपतेः श्रीध्रुवाख्यानमिथन्-
मोदांभोधौ मुकुरसहजे सर्ग एष द्वितीयः ॥

நன்னடத்தையையே முக்கியமாகக் கொண்டவரும் பற்றற்ற அந்தணருமான ஸுப்பிரமண்யரும் ஸ்ரீமதியான ஸீதாலக்ஷ்மியும் எந்த நல்ல வித்வானைப் பெற்றெடுத்தார்களோ, அந்த கச்சபி கணபதியின் புகழ் மிக்கதும் ஸ்ரீ துருவனின் கதையிலிருந்தும் வெளியான மகிழ்ச்சிக் கடலாகவுள்ளதும், முகுரம் என்ற நூலுடன் தோன்றியதுமான காவியத்தில் இரண்டாம் சருக்கம் இது. 78

इति ध्रुवचरितमहाकाव्ये द्वितीयः सर्गः ।

## तृतीयः सर्गः

रमणसंगमसंभृतदोहदं भृतवती स्ववशंवदवल्लभा ।
सुरुचिरुत्तमनामकमुत्तमे सुतमसूत दिने शुभलक्षणम् ॥

தனக்கு வசமாகிய கணவனுடன் கூடிய ஸுருசி, நாயகனுடன் சேர்ந்ததால் ஏற்பட்ட மசக்கையுடன் கூடிய கருவைத் தாங்கியவளாக ஒரு நல்ல நாளில் நல்ல அங்க அமைப்பு கொண்ட உத்தமனென்ற பிள்ளையைப் பெற்றாள். 1

निजधवेन कदाचन योगतो जलभृतेव सुनीतिरुपाहितम् ।
अभृत वीर्यमवन्ध्यमसौ सती विमलमम्बुकणं किल शुक्तिवत् ॥

என்றோ தன் கணவனுடன் சேர்ந்ததால் ஸுநீதியும், மேகத்தால் அளிக்கப்பட்ட அப்பழுக்கற்ற நீர்த்திவிலையை முத்துச் சிப்பி சுமப்பது போல் கணவனது வீர்யத்தை (கருவாக) சுமந்தனள். 2

अथ सुनीतिरनुत्तमतेजसं सुतमसूत शुभे समये स्वयम् ।
दिनमुखे दिविषत्पतिदिग्वधूरिव महोनिधिमण्डलमुज्ज्वलम् ॥

பின்னர் ஸுநீதியும் நல்லவேளையில் உயர்ந்த ஒளிகொண்ட குமாரனை, காலையின் தொடக்கத்தில் இந்திரனது திசையாகிய கிழக்கெனும் பெண் ஒளியால் விளங்கும் கதிரவனைப்பெற்றதுபோல் பெற்றாள். 3

मृदु ववौ सुरभिः शिशिरो मरुन्नयनयोर्हरितिः सुभगा भृशम् ।
अतितमां प्रससाद जलाशयो द्विगुणमेव महांसि चकाशिरे ॥

மணமும் குளிர்ச்சியும் கொண்ட காற்று மென்மையாக வீசிற்று. பசுமை மிகவும் கண்களுக்கு அழகாக இருந்தது. நீர்தேக்கம் மிகவும் தெளிந்திருந்தது. சூர்யன் முதலிய ஒளிமண்டலங்கள் இருமடங்கு ஒளியுடன் விளங்கின. 4

मुमुदिरे जगतां हृदयानि तैरनुपलक्षितकारणमञ्जसा ।
जनिदिनं स्थिरजंगमसन्ततेरिदमतीव मुदे सुरुचिं विना ॥

அவர்களால் வகை அறியமுடியாவண்ணம் மக்களின் மனங்கள் மகிழ்ந்தன. ஸுருசியைத் தவிர மற்ற ஸ்தாவர ஜங்கமப் பொருளனைத்திற்கும் அந்தக் குழந்தையின் பிறந்த நாள் மிகுந்த மகிழ்ச்சிக்காக அமைந்தது. 5

निखिललोकविकासकरेऽपि तज्जनिदिने सुरुचिर्मुमुदे न यत् ।
क इह हेतुरसूयुतया विना न नलिनी विमुखा विधुदोषतः ॥

அவன் பிறந்தநாள் உலகமனைத்திற்கும் மகிழ்ச்சி தரக்கூடியதாக இருந்தும் ஸுருசி மட்டும் மகிழ்ச்சியடையவில்லை என்பதன் காரணம் அஸூயையை விட வேறு எது? சந்திரனிடமுள்ள தோஷத்தால் தாமரை முகத்தைத் திருப்பிக் கொள்வதில்லையே! 6

निभृतमङ्कतले शयितेन सा निजसुतेन सुनीतिरराजत ।
अमृतभानुमनुक्षणमुद्गतं दिविषदीशदिशा किल बिभ्रती ॥

நொடிக்கு நொடி வெளிவந்து கொண்டிருக்கும் சந்திரனைத் தாங்கி நிற்கும் கிழக்கு திசையைப் போல், அந்த ஸுநீதி தன் மடியில் அழகாகப் படுக்க வைத்திருக்கும் தன் குழந்தையால் மிகவும் அழகாக விளங்கினாள். 7

सति परं पथि साहसशालितागुणममुष्य विशिष्य वितृण्वतीम् ।
क्षितिपतिस्समये श्रुतसंमतां स विदधे ध्रुव इत्यभिधां रहः ॥

நல்வழியில் ஸாஹஸத்துடன் ஈடுபடும் இவனது குணத்தை நன்கு வெளிப்படுத்தக் கூடியதும் நல்ல கல்விமான்களால் ஒப்புக் கொள்ளப்பட்டதுமான துருவன் என்ற பெயரை அரசர் பிறர் அறியாத வண்ணம் உரிய காலத்தில் இட்டார். 8

निजधवेन नितान्तकदर्थिता सुतमवाप्य तमुच्छ्वसिति स्म सा ।
खरकरेण मही बहुतापिता प्रथमवर्षमिवाप्तवती तदा ॥

கொடுமையான கிரணங்களுள்ள கதிரவனால் மிகவும் கொதிப் படைந்த பூமி முதல் மழையைப் பெற்று ஆசுவாசம் அடைவது போல் தன் கணவரால் அளவுக்கு மீறி அவமதிப்புக்குள்ளாக்கப்பட்ட அவள் அந்தப் பிள்ளையை அடைந்து மிகவும் ஆசுவாசமடைந்தாள். 9

प्रतिपदिन्दुकलेव दिने दिने शिशुरसौ स्पृहणीयतरोदयः ।
मुदमतीव मुहुर्मुहुरीक्षितुर्जनचयस्य च मातुरतन्तनीत् ॥

சுக்கில பட்சத்துப் பிரதமையிலுள்ள சந்திர கலையைப் போல் தினம் தினம் விரும்பத்தக்க வளர்ச்சியைப் பெற்ற அந்த சிசு தன்னைக் காணும் மக்கள் கூட்டத்திற்கும் தாய்க்கும் அதிக மகிழ்ச்சியைத் தொடர்ந்து தந்தான். 10

हृदयदेशजुषं सततं च सा क्षणमनागमनेऽप्यतिदुःखदम् ।
निजसुखाभ्युदयैकनिदानकं सुतमिमं निजजीवितवद्दधे ॥

எப்போதும் தன் இதயத்தினுள்ளேயே இருப்பவனும் சிறிது காணப்படாவிட்டாலும் (வெளியே சென்று வராவிட்டாலும்) அதிக துக்கத்தைத் தருபவனும் தன் சுகத்திற்கும் மேன்மைக்கும் ஒரே காரண மாயிருப்பவனுமான இந்தக் குமாரனை தன் உயிர் போல் மதித்தாள். 11

क्षणमलंकरणैरिममेकधा क्षणमथान्यविधैरथ चापरैः ।
इति सुतं बहु मण्डयमानया न ततृपे सुतवत्सलया तया ॥

பிள்ளையிடம் அன்பு மிக்க அவளால் ஒரு நொடி சில அணி களாலும் மற்றொரு நொடி வேறு அணிகளாலும் அலங்கரித்து திருப்தியைப் பெற முடியவில்லை. 12

सुतमुखेन्दुविलोकनविच्युतिं न सहते स्म सुनीतिरपि क्षणम् ।
सततभर्तृसपत्न्यभिभूतिभाक् श्रमवतामतिवत्सलतेप्सिते ॥

தனயனது சந்திரனுக்கொப்பான முகப்பார்வையிலிருந்தும் நழுவுவதை ஸுநீதி ஒரு நொடி கூட தாங்கவில்லை. எப்போதும் கணவனிடமிருந்தும் சக்களத்தியிடமும் அவமானமடைந்து சிரமப்படு பவர்களுக்கு விரும்பும் பொருளில் அதிக வாத்ஸல்யம் இருக்கும். 13

पतिकृतं निखिलं च पराभवं तदुदितस्तनयोऽयमपानयत् ।
बहुलपक्षरविप्रभवं यथा कुमुदिनीदवथुं विधुरर्भकः ॥

கணவன் செய்த எல்லா அவமானத்தையும் அவரிடமிருந்து தோன்றிய இந்த மகன் போக்கினான். கிருஷ்ணபக்ஷத்துச் சூரியனிட மிருந்து உண்டான அல்லிக்கூட்டத்திற்கு ஏற்பட்ட தாபத்தை சிசுவான சந்திரன் போக்குவதுபோல். 14

स्वयमधीरतरापि निसर्गतस्सुतमवाप्य सुनीतिरसौ ध्रुवम् ।
धृतिमवाप मनागिव योषितां किल महानवलंब इहात्मजः ॥

தான் இயற்கையாக மிகவும் கோழையாயினும் அந்த ஸுநீதி பிள்ளையை அடைந்து பின் சிறிது தைரியத்தை அடைந்தாள். பெண்களுக்குப் பிள்ளை பெரிய பிடிப்பு அல்லவா? 15

प्रतिदिनं पितृदर्शनहेतवे सुतमसावुपमातृसुतैः समम् ।
अतुलरत्नविभूषणभूषितं किल सुनीतिरचोदयदादरात् ॥

அந்த ஸுநீதி தினந்தோறும் தந்தையைக் காண்பதற்காக மாற்றாந்தாய் பிள்ளைகளுடன் கூட விலைமதிப்பற்ற ரத்ன அணிகளால் அலங்கரிக்கப்பட்ட தன் பிள்ளையையும் மரியாதையுடன் அனுப்பி வைத்தாள். 16

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

पाठमाला अनुबन्धः ७५ பாடமாலா தொடர் 75

षण्णवतितमः पाठः—பாடம் 96

## संक्षिप्तं अभिज्ञानशाकुन्तलम्–९

षष्ठं दृश्यम् (अनुवर्तते)

[शकुन्तला सखीभ्यां अन्वास्यते। राजा अपवृतः तिष्ठति।)

शकुन्तला—तत् यदि वां अनुमतं, तथा कुरुतं यथा तस्य राजर्षेः अनुकंपनीया भवामि। अन्यथा सिञ्चतं मे तिलोदकम्।

प्रियंवदा—(जनान्तिकं) अनसूये, अस्याः कामो दूरं गतः। कालहरणस्य अक्षमा इयम्। यस्मिन् एषा भावं बद्धवती, स पौरवाणां ललामभूतः। तदस्या अभिलाषोऽभिनन्दितुं युक्तम्।

अनसूया—तथा यथा भणसि।

प्रियंवदा—(प्रकाशं) सखि! दिष्ट्या ते अभिनिवेशः अनुरूपः। सागरं उज्झित्वा कुत्र वा महानदी अवतरति।

अनसूया—अविलंबितं निभृतं च सख्याः मनोरथं संपादयावः। तत्र कः पुनः उपायो भवेत्?

प्रियंवदा—निभृतमिति तु चिन्तनीयम्। शीघ्रमिति सुकरम्।

अनसूया—कथमिव?

प्रियंवदा—स राजर्षिः अस्यां स्निग्धदृष्ट्या अभिलाषं सूचयति ननु? एतान् दिवसान् प्रजागरेण कृशो लक्ष्यते। (विचिन्त्य) हला! मदनलेखोऽस्मै क्रियताम्। तं सुमनोभिः गोपितं कृत्वा देवप्रसादस्य अपदेशेन अस्य हस्तं प्रापयिष्यामि।

अनसूया—सुकुमारः प्रयोगः। मे रोचते। किं वा शकुन्तला भणति?

शकुन्तला—किं वां नियोगः विकल्प्यते ?

प्रियंवदा—तर्हि चिन्तय किमपि ललितं पदबन्धनम्।

शकुन्तला—हला ! अहं चिन्तयामि। अवधीरणायाः भीरु मे हृदयम्। ततो वेपते।

राजा—(आत्मगतं सहर्षं) यस्मात् अवधीरणां विशंकसे, सोऽयं ते संगमे उत्सुकः तिष्ठति। प्रार्थयिता श्रियं लभेत वा, न वा, न जाने। परं श्रिया ईप्सितो जनः कथं दुरापः ?

सख्यौ—अयि ! आत्मनो गुणान् त्वं अवमन्यसे ! कः इदानीं शरीरतापस्य निर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति।

शकुन्तला—(सस्मितं) इदानीं नियोजिता अस्मि। (इति उपविष्टा चिन्तयति।) हला चिन्तितं मया गीतवस्तु। परं लेखनसाधनानि न सन्निहितानि।

प्रियंवदा—अस्मिन् सुकुमारे नलिनीपत्रे नखैः वर्णानि निक्षिप।

शकुन्तला—(तथा कृत्वा) हला, शृणुतं इदानीं संगतार्थं न वा इति।

सख्यौ—अवहिते स्वः।

शकुन्तला—(वाचयति) निर्घृण ! तव हृदयं न जाने। मम पुनः अङ्गानि कामः रात्रावपि बलीयः तपति।

राजा—(सहसा तां उपसर्पति) तनुगात्रि ! मदनः त्वां अनिशं तपति, मां पुनः दहत्येव। दिवसो यथा शशांकः ग्लपयति, न तथा कुमुद्वतीं ग्लपयति।

सख्यौ—(राजानं विलोक्य, सहर्षं उत्थाय) स्वागतं मनोरथस्य। (शकुन्तला अभ्युत्थातुं इच्छति)

---

अन्वास्यते பணிவிடை செய்யப்படுகிறாள். आवृतः மறைந்திருப்பவனாக. अनुमतं அனுமதிக்கப்பெற்றது. अनुकंपनीया பரிவிற்குரியவளாக. सिंचतं தெளியுங்கள் सिंच सिंचतं सिंचत (अन्यथा-दक्कं இல்லாவிடில் எள்ளு கலந்த நீரைத் தெளியுங்கள். நான் மாய்ந்து விடுவேன் எனப்பொருள்) जनान्तिकं இருவருக்குள், தனிமையில், காதோடு. कालहरणं பொழுதுபோக்கு. अक्षमा பொறுக்காதவள், தாங்கமுடியாதவள். भावं बद्धवती

கருத்தை ஆழப்பதித்துக்கொண்டிருக்கின்றவள். **पौरवः** பூருவம்சத்தினன். **ललामभूतः** தலையணியாக (சிறந்தவனாக) இருப்பவன். **भणसि** சொல்கிறாய். **भणसि भणथः भणथ. यथा भणसि तथा** எப்படிச் சொல்கிறாயோ அப்படி. **दिष्ट्या** எதிர்பாராதவிதமாக. **अभिनिवेशः** உள்ளக்கிடக்கை. **अनुरूपः** (உனக்குத்) தகுந்தது. **उज्झित्वा** விட்டு விட்டு. **अविलंबिते** தாமதமின்றி. **निभृतं** ரகசியமாக. **स्निग्धदृष्टिः** கனிந்த பார்வை. **प्रजागरः** தூக்கமின்றி விழித்திருத்தல். **मदनलेखः** காதல் கடிதம். **सुमनः** பூ. **देवप्रसादस्य अपदेशः** தைவத்தின் பிரசாதம் என்ற சாக்கு. **प्रापयिष्यामि** சேர்ப்பிப்பேன். **सुकुमारः प्रयोगः** அழகிய ஏற்பாடு. **नियोगः** உத்தரவு. **विकल्प्यते** மாற்றப்படுகிறது. **पदबन्धनं** சொற்கட்டு. கடிதவாசகம், செய்யுள் **ललितं** எளியது. அழகானது. **अवधीरणा** மறுதளிப்பு. **भीरु** பயந்தது. **वेपते** நடுங்குகிறது. **वेपते वेपेते वेपन्ते. यस्मात् अवधीरणां विशंकसे** எவரிடமிருந்து மறுதளிப்பு பற்றி கவலைப்படுகிறாயோ. **प्रार्थयिता** வேண்டுபவன். **ईप्सितः** விரும்பப்படுபவன். **दुरापः** சிரமப்பட்டுக் கிடைப்பவன். (கிடைப்பது எளிதல்ல). **निर्वापयित्री** அணைப்பவள். **शारदी ज्योत्स्ना** சரத்ருதுவின் நிலா. **पटान्तः** மேலாடையின் நுனி. **वारयति** தடுக்கிறான். **नियोजिता** (உங்களால்) ஈடுபடுத்தப்பட்டவளாக, உத்தரவிடப்பட்டவளாக. **गीतवस्तु** பாட்டின் பொருள் — பாட்டின் அமைப்பு. **लेखनसाधनं** எழுதும் உபகரணம். **वर्णानि निक्षिप** எழுத்துக்களைப் பதியவைப்பாய். **शृणुतं** (இருவர்) கேளுங்கள். **शृणु शृणुतं शृणुत. संगतार्थं** பொருள் பதிந்ததாக. **अवहितौ** கவனத்துடன் இருப்பவர்களாக. **स्वः** இருவர் இருக்கிறோம். **अस्मि स्वः स्मः. निर्घृणः** பரிவற்றவன். **बलीयः** மிக்க பலமுள்ளதாக. **तपति** வாட்டுகிறான். **तपति तपतः तपन्ति, सहसा** வேகமாக. **उपसर्पति** நெருங்குகிறான். **तनुगात्री** மெல்லியலாள். **अनिशं** எப்போதும். **दहति** எரிக்கிறான். **दहति दहतः दहन्ति । दिवसः** பகல். **शशांकः** சந்திரன். **ग्लपयति** வாட்டுகிறான் **ग्लपयति ग्लपयतः ग्लपयन्ति । कुमुद्वती** அல்லி ஓடை. **स्वागतं अविलंबिनो मनोरथस्य** தாமதமின்றி வந்த (என் தோழியின்) மனோரதத்திற்கு (தங்களுக்கு) நல்வரவாகுக! **अयि!** அடியே! **हला!** ஏலோய் என்பது போல் சம வயதுள்ளவரை நெருக்கமுள்ளவர் கூப்பிடும் சொல்.

பயிற்சிகள் :

1. இந்தப் பாடத்தைத் தமிழாக்குக.

2 राजर्षेः, मनोरथं, दृष्ट्वा, सुमनोभिः, अवधीरणायाः, प्रार्थयिता, गीतवस्तु, निर्घृण, कुमुद्वतीं இந்த சொற்கள் எந்த விபக்தியில் வந்துள்ளன ? மற்ற இரு வசனங்களையும் தருக.

3 सिञ्च, भणसि, अस्मि, निक्षिप, अवमन्यसे இந்த வினைச் சொற்கள் எந்த லகாரத்தில் அமைந்துள்ளன ? மூன்று புருஷன் களிலும் அந்த லகாரத்தின் ரூபங்களைத் தருக.

4 राजर्षेः अनुकंपनीया, यस्मिन् एषा, सख्याः मनोरथं, संगमे उत्सुकः, श्रिया ईप्सितः, कः इदानीं, वा इति, मदनः त्वां இவைகளை ஸந்தி சேர்த்து எழுதுக.

5 तदस्या अभिलाषोऽभिनन्दितुं, मदनलेखोऽस्मै, ईप्सितो जनः, दहत्येव, दिवसो यथा இவைகளை ஸந்தி பிரித்து எழுதுக.

## सप्तनवतितमः पाठः—பாடம் 97

## ஸமாஸங்கள்—தத்புருஷஸமாஸம்

தத்புருஷ ஸமாஸத்தில் இரண்டாவது (பின்னர் வரும்) பதத்தின் பொருள் முக்கியத்துவம் பெறும். இங்கு பொதுவாகக் கூட்டு சேரும் பதங்களில் முன்பதம் விசேஷணமாகவும் பின்பதம் விசேஷ்யமாகவும் அமையும். பாடம் 24 ல் ஸமாநாதிகரண விசேஷணங்களைக் கற்றோம். ஸமாந-அதிகரணம் என்றால் " அபேத சம்பந்தத்துடன் இணைகிற " என்று பொருள்.

| | | |
|---|---|---|
| उन्नतः पर्वतः, | शीतलं जलं, | मधुरं गीतं |
| உயர்ந்த மலை, | குளிர்ந்த நீர், | இனிய பாட்டு |

இங்கு उन्नतः शीतलं मधुरं என்ற மூன்றும் ஸமாநாதிகரண விசேஷணங்கள் ஆகும். உயர்ந்த என்றும் மலை என்றும் குறிப்பிடுவது ஒரே பொருள். குளிர்ந்த என்றும் நீர் என்றும் குறிக்கப்படுவது ஒன்றே. இனிய என்றும் பாட்டு என்றும் குறிக்கப்படுவது ஒன்றே. வேறல்ல. இவைகளுக்கு இடையே அபேத ஸம்பந்தமுள்ளது. அதனால் ஸமாநாதிகரண ஸம்பந்தம் உள்ளவை. இந்த விசேஷணங்கள் விசேஷ்யத்தின் லிங்க விபக்தி-வசனங்களுடன் ஒன்றுபடும் என்று அங்கு படித்தோம்.

"ஊழிற் பெருவலி யாவுள மற்றொன்று
சூழினும் தான்முந் துறும்"
—திருக்குறள்



R. N. 30478/77—SAMSKRITA SRI—22-1-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.



Printed by S. Naganathan, at Theni Printers, Trichy. Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society. (Regd.) Trichy Branch : 9. Single Mall Street, Tiruchirapalli-620 002.